वा संभृतं चक्षुषो वा । तमनु प्रेहि
सुकृतस्य लोकं यत्र ऋषयः प्रथम-
जा ये पुराणाः । एतꣳ सधस्थ प-
रि ते ददामि यमावहाच्छेवधिं जा-

तमिति सं-भृतम् । चक्षुषः । वा । तम् । अनु । प्रेति । इहि । सुकृतस्येति सु-कृतस्य । लोकम् । यत्र । ऋषयः । प्रथमजा इति प्रथम-जाः । ये । पुराणाः । [2]एतम् । सधस्थेति सध-स्थ । परीति । ते । ददामि । यम् । आवहादित्या-वहात् । शेव-

यदेतेभ्यः समसुस्रोत् स्रुतं सम्यक्परिनिष्पन्नम् । ल्यब्लोपे पञ्चमी । एतानि प्राप्य निष्पन्नं इदानीमिति । स्रुवतेर्लुङि शपश्श्लुः । तं अभिप्रेतमर्थं अनु लक्षीकृत्य प्रेहि गच्छ । कीदृशीमित्याह—सुकृतस्य लोकं सुकृतफलभोगस्थानं यत्र सुकृतिन एव गच्छन्ति तत् स्थानं गच्छ—हे यजमान । देहपातोत्तरकालमिति सामर्थ्यात् गम्यते । 'सूपमानात्क्तः' इति सुकृतशब्दोन्तोदात्तः । पुनश्च विशेष्यते—यत्रासते प्रथमजाः नित्याः स्वयम्भुप्रभृतयः ऋषयो द्रष्टारः ये च पुराणाः पूर्वमुक्ता नः पूर्वे वा अस्माकं पित्रादयः तत् स्थानं गच्छेति ॥

[2]अथ द्वितीया—एतमिति ॥ अग्निरामन्त्र्यते—हे अग्ने सधस्थ सहस्थानस्थित पृथिव्यामेतावन्तं कालमनेन सहस्थित । 'सधमादस्थयोः' इति सहशब्दस्य सधादेशः । इदानीं गच्छते तुभ्य-

तवेदाः । अन्वागन्ता यज्ञपतिर्वो अ-
त्र तꣳ स्म जानीत परमे व्योमन्न् ।
जानीतादेनं परमे व्योमन्देवास्स-

धिमिति शेव—धिम् । जातवेदा इति जात—वेदाः । अन्वागन्तेत्यनु—आगन्ता । यज्ञपतिरिति यज्ञ—पतिः । वः । अत्र । तम् । स्म । जानीत । परमे । व्योमान्निति वि—ओमन्न् । [3]जानीतात् । एनम् ।

---

मेनं यजमानं परिददामि रक्षार्थं तव हस्ते करोमि तत्रापि सहासने स्थातुमिति भावः । रक्षामिदानीं प्रार्थयते—जातवेदाः जातप्रज्ञानः रक्षणोपायज्ञः त्वं शेवधिं निधिस्थानं यमावहात् आवहसि निधिमिव परिगृह्णासि गोपायसि च तं परिददामीति । वहेर्लेटि पुरुषव्यत्ययः, आडागमश्च । इदानीं देवा आमन्त्र्यन्ते—हे देवाः यूयमपि शृणुत अयं यज्ञपतिर्यजमानः वः युष्मानन्वागन्ता युष्मान्गच्छतोन्वागन्ता अनन्तरमेवानुक्रमेण आगमिष्यति । 'न लुट्' इति निघातप्रतिषेधः । 'तास्यनुदात्तेत्' इति लसार्वधातुकस्यानुदात्तत्वं, टिलोप उदात्तनिवृत्तिस्वरेण तस्यैवोदात्तत्वं, 'गतिर्गतौ' इति प्रथमस्य गतेरनुदात्तत्वम्, 'तिङि चोदात्तवति' इति द्वितीयस्य 'उदात्तवता तिङा' इति 'गतिमता च' इति द्वयं समस्यते । तत्र परमे व्योम्नि प्रशस्ते निधिलक्षणे च पुण्यलोके युष्मानन्वागन्तारं जानीत प्रविष्टवानयमस्य स्थानमिति तमेनं स्वीकुरुत । स्मेति पादपूरणे, सामप्रतीकत्वं वा द्योतयति ॥

[3]अथ तृतीया—जानीतादिति ॥ हे देवाः प्रथमं तावदेनं परमे

धस्था विद रूपमस्य । यदागच्छात्
॥३०॥ पथिभिर्देवयानैरिष्टापूर्ते कृ-
णुतादाविरस्मै । सं प्र च्यवध्वमनु सं

परमे । व्योमन्निति वि-ओमन् । देवाः । सधस्था इति सध-स्थाः । विद । रूपम् । अस्य । यत् । आगच्छादित्या-गच्छात् ॥ ३० ॥ पथिभिरिति प-थि- भिः । देवयानैरिति देव-यानैः । इष्टापूर्ते इतीष्टा-पूर्ते । कृणुतात् । आविः । अस्मै । सम् ।

---

व्योमन् स्थाने आगतं जानीतात् जानीत 'तस्य तात्' इति तादेशः । अनन्तरं चेह सधस्थाः सहासने स्थातारः अत एव अस्य रूपं विद जानीत कीदृशोयमिति विदितरूपविशेषमेनं कुरुत । 'विदो लटो वा' इत्याकारादेशः । तत्र यद्ययं देव-यानैः पथिभिरागच्छात् आगतस्स्यात् । पूर्ववदाडागमः । ततो-स्मै इष्टापूर्ते इष्टापूर्तफले आविष्कृणुतात् आविष्कृणुत एतदर्थ-मिष्टापूर्ते च गतवान्, ईदृशं च तयोः फलमिति । पूर्ववत्तादे-शः । इष्टं देवेभ्यः । पूर्तं पितृभ्यः । छान्दसं पूर्वपदस्य दीर्घत्वम् । अत्र देवा इति पादादित्वान्न निहन्यते, 'विभाषितं विशेषवचने' इति तस्याविद्यमानवत्त्वनिषेधाद्द्वितीयमामन्त्रितं न नि-हन्यते । 'आमन्त्रितं पूर्वमविद्यमानवत्' इति द्वयोरप्यविद्य-मानवत्त्वात् तेनाख्यातं निहन्यते ॥

'अथ चतुर्थी—सं प्र च्यवध्वमिति ॥ व्याख्यातेयं 'अग्नि यु-

प्र यातान्ने पथो देवयानान्कृणुध्वम्।
अस्मिन्थ्सधस्थे अध्युत्तरस्मिन्विश्वे
देवा यजमानश्च सीदत । प्रस्तरेणं
परिधिना स्रुचा वेद्या च बर्हिषा ।
ऋचेमं यज्ञं नो वह सुवर्देवेषु गन्तं-

प्रेति । च्यवध्वम् । अन्विति । सम् । प्रेति । यात । अग्ने । पथः । देवयानानिति देव-यानान् । कृणुध्वम् । अस्मिन् । सधस्थ इति सध-स्थे । अधीति । उत्तरस्मिन्नित्युत्-तरस्मिन् । विश्वे । देवाः । यजमानः । च । सीदत । [5]प्रस्तरेणेति प्र-स्तरेण । परिधिनेति परि-धिना । स्रुचा । वेद्या ।

---

नज्मि'* इत्यत्र । हे अग्ने विश्वे देवाः सर्वे यूयं यजमानश्च इत्थं कृतसंवादा इदानीं संप्रच्यवध्वं सम्यगस्मात् स्थानात् प्रचलत । अनन्तरं च संप्रयात सहिता एव गच्छत । गच्छन्तश्च देवयानेनैव पथः कृणुध्वम् अन्यैः पथिभिः न गन्तव्यम् । एवमस्मिन् सधस्थे सहस्थाने लोके उत्तरस्मिंश्च द्युलोके इदानीं देहपातोत्तरकालं च सीदत परस्परस्योपकुर्वन्तो वर्तध्वमिति ॥

[5]अथ पञ्चमी—प्रस्तरेणेति ॥ प्रस्तरादिभिः सह इममस्माकं यज्ञं वह प्रापय देवान् देवेष्विति विभक्तिव्यत्ययः । स्रुग्ग्रहणं

---

*सं. ४-७-१३.

वे । यदिष्टं यत्परादानं यद्दत्तं या च
दक्षिणा । तत् ॥ ३१ ॥ अग्निर्वैश्व-
कर्मणस्सुवर्देवेषु नो दधत् । येना
सहस्रं वहसि येनाग्ने सर्ववेदसम् ।
तेनेमं यज्ञं नो वह सुवर्देवेषु गन्त-

च । बर्हिषा । ऋचा । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु । गन्तवे । [6]यत् । इष्टम् । यत् । परादानमिति परा-दानम् । यत् । दत्तम् । या । च । दक्षिणा । तत् ॥ ३१ ॥ अग्निः । वैश्वकर्मण इति वैश्व-कर्मणः । सुवः । देवेषु । नः । दधत् । [7]येन । सहस्रम् । वहसि । येन । अग्ने । सर्ववेद-

---

पात्राणामप्युपलक्षणम् । ग्रहणमन्त्राणां प्रयोजनं चाह—सुवर्गन्तवे अस्माकं स्वर्गगमनाय । तुमर्थे तवेन् प्रत्ययः ॥

[6]षष्ठी—यदिष्टमिति ॥ यदिष्टं देवेभ्यो दत्तं दर्शपूर्णमासादिषु यत्परादानं नात्यादरेण दत्तं दीनान्धकृपणादिभ्यः यद्दत्तं समीचीनं बहिर्वेदि यागे च दक्षिणा अन्तर्वेदि यद्दत्तं तत् सर्वं वैश्वकर्मणोग्निरस्माकं स्वर्गहेतुर्देवेषु दधत् स्थापयतु स्वर्गसाधनमेव सर्वं करोतु । लेट्याडागमः ॥

[7]सप्तमी—येना सहस्रमिति ॥ ........* ॥

---

*अत्र सप्तममन्त्रस्य भाष्यं अष्टममन्त्रावतारिका च गलिता.

वे । येनाग्ने दक्षिणा युक्ता यज्ञं व-
हन्त्यृत्विजः । तेनेमं यज्ञं नो वह
सुवर्देवेषु गन्तवे । येनाग्ने सुकृतः
पथा मधोर्धारा व्यानशुः । तेनेमं
यज्ञं नो वह सुवर्देवेषु गन्तवे । यत्र
धारा अनपेता मधोर्घृतस्य च याः।

समिति सर्व—वेदसम् । तेन । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु । गन्तवे । [8]येन । अग्ने। दक्षिणाः । युक्ताः । यज्ञम् । वहन्ति । ऋत्विजः । तेन । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु। गन्तवे । [9]येन । अग्ने । सुकृत इति सु—कृतः । पथा । मधोः । धाराः । व्यानशुरिति वि—आनशुः। तेन । इमम् । यज्ञम् । नः । वह । सुवः । देवेषु ।

---

[8]हे अग्ने येन पथा युक्ता योग्या दक्षिणा यज्ञं च ऋत्विजो वहन्ति । यद्वा—दक्षिणाभिर्युक्तं इत्युभयत्र व्यत्ययः । तेनेत्यादि । गतम् ॥

[9]नवमी—येनाग्ने सुकृत इति ॥ हे अग्ने येन पथा सुकृतः मधोः मधुरस्य धारा व्यानशुः व्याप्नुवन् । व्यत्ययेन परस्मैपदम् । यद्वा—सुकृतः देवाः येन पथा नीताः मधोः मधुरसस्य घृतस्य धारा व्यानशुः व्यश्नवते । छान्दसो लिट् । तेनेत्यादि । गतम् ॥

तद॒ग्निर्वै॑श्वकर्म॒णस्सुव॑र्दे॒वेषु॑ नो द॒-
धत् ॥ ३२ ॥
यास्ते॑ अग्ने स॒मिधो॒ यानि॒ धाम॒ या
जि॒ह्वा जा॑तवेदो॒ यो अ॒र्चिः । ये ते॑

गन्त॑वे । [10]यत्र॑ । धारा॑ः । अन॑पेता॒ इत्यन॑प–इ॒ताः॥ मधो॑ः । घृ॒तस्य॑ । च॒ । याः । तत् । अ॒ग्निः । वै॒-श्वक॒र्म॒ण इति॑ वैश्व–क॒र्म॒णः । सुव॑ः । दे॒वेषु॑ । न॒ः । द॒ध॒त् ॥ ३२ ॥

आ॒गच्छा॒त्तद्वया॑न॒शुस्तेने॒मं य॒ज्ञं नो॑ वह॒
सुव॑र्दे॒वेषु॒ गन्त॑वे॒ चतु॑र्दश च ॥ ७ ॥

[1]याः । ते॒ । अ॒ग्ने॒ । स॒मिध॒ इति॑ सं–इध॑ः । यानि॑ । धाम॑ । या । जि॒ह्वा । जा॒त॒वे॒द॒ इति॑ जात–

---

[10]दशमी—यत्रेति ॥ यत्र पथि मधोः घृतस्य च या धारा अनपेताः तत्र लोके देवेषु स्थापयतु किं मधोः घृतस्य च धाराः अनुपक्षीणा देवयोग्याश्च करोत्वित्यर्थः ॥

इति पञ्चमे सप्तमे सप्तमोनुवाकः.

---

[1]स्वयंचितिं जपति—यास्त इति त्रिष्टुभा ॥ हे अग्ने जातवेदः जातप्रज्ञ जातधन वा यास्तव समिधः समिन्धनानि यानि च धाम धामानि जन्मस्थानानि । ‘सुपां सुलुक्’ इति लुक्,

अग्ने मेडयो य इन्दवस्तेभिरात्मानं
चिनुहि प्रजानन्न् । उत्सन्नयज्ञो वा
एष यदग्निः किं वाऽहैतस्य क्रियते
किं वा न यद्वा अध्वर्युरग्नेश्चिन्वन्न-
न्तरेत्यात्मनो वै तदन्तरेति यास्ते
अग्ने समिधो यानि ॥ २३ ॥ धा-

वेदः । यः । अर्चिः । ये । ते । अग्ने । मेडयः । ये । इन्दवः । तेभिः । आत्मानम् । चिनुहि । प्र-जानन्निति प्र-जानन्न् । [2]उत्सन्नयज्ञ इत्युत्सन्न-य-ज्ञः । वै । एषः । यत् । अग्निः । किम् । वा । अ-ह । एतस्य । क्रियते । किम् । वा । न । यत् । वै । अध्वर्युः । अग्नेः । चिन्वन्न् । अन्तरेतीत्यन्तः-एति । आत्मनः । वै । तत् । अन्तः । एति । याः ।

---

यश्चार्चिः दीप्तिः हे अग्ने अङ्गनादियुक्त । ये च मेडयः शब्दाः चमनामसूपमितामिदम् । ये ते च इन्दवः विप्रुषः तेभिस्तैस्सर्वैः स्वयमेवात्मानं चिनुहि । ‘ उतश्च प्रत्ययाच्छन्दो वा वचनम् ’ इति हेर्लोपाभावः । प्रजानन् प्रकृष्टो ज्ञाता । कोन्यस्त्वद्दते तां चेतुं शक्नुयादिति भावः । तेभिरिति । ‘ बहुलं छन्दसि ’ इति ऐस-भावः, ‘ नपुंसकमनपुंसकेन ’ इति नपुंसकं शिष्यते ॥

[2]अथात्रैव ब्राह्मणम्—उत्सन्न यज्ञ इत्यादि ॥ व्याख्यातम्* ।

---

*सं. ५-३-१.

मेत्याहैषा वा अग्नेस्स्वयंचितिरग्नि-
रेव तदग्निं चिनोति नाध्वर्युरात्म-
नोन्तरेति चतस्र आशाः प्र चर-
न्त्वग्नयं इमं नो यज्ञं नयतु प्रजान-
न्न्। घृतं पिन्वंन्नजरꣳ सुवीरं ब्रह्म

ते। अग्ने। समिध इति सं-इधः। यानि ॥३३॥
धाम। इति। आह। एषा। वै। अग्नेः। स्वयं-
चितिरिति स्वयं-चितिः। अग्निः। एव। तत्।
अग्निम्। चिनोति। न। अध्वर्युः। आत्मनः।
अन्तः। एति। [3]चतस्रः। आशाः। प्रेति। चर-
न्तु। अग्नयः। इमम्। नः। यज्ञम्। नयतु। प्र-
जानन्निति प्र-जानन्न्। घृतम्। पिन्वन्न्। अज-

---

पुरुषबुद्ध्यविषयत्वेन ज्ञानवत्त्वस्य परिहृतत्वात् अध्वर्योरात्मैकदेशान्तरस्याभावः ॥

[3]कूर्मोपधानमन्त्रः—चतस्र आशा इति त्रिष्टुप् ॥ चतस्र आशा दिशः अग्नयः प्रचरन्तु प्रकाशनार्थाय स्वर्गं गच्छतोस्य। अयं च कूर्मः इममस्माकं यज्ञं स्वर्गं नयतु प्रापयतु प्रजानन् प्रकृष्टो ज्ञाता घृतमुदकं अजरं अविनाशं सुवीर्यं च शोभनवीर्यं च पिन्वन् सिञ्चन् इमं यज्ञं नयत्विति। ब्रह्मैव समिन्धनं भवतु आहुतीनामग्नीनां प्रचरताम्। आहूयन्ते याभ्य

समिद्भवत्याहुतीनाम् । सुवर्गाय वा एष लोकायोप धीयते यत्कूर्मश्चतस्र आशाः प्र चरन्त्वग्नय इत्याह ॥ ३४ ॥ दिश एवैतेन प्र जानातीमं नो यज्ञं नयतु प्रजानन्नित्याह सुवर्गस्य लोकस्याभिनीत्यै ब्रह्म समिद्भवत्याहुतीनामित्याह ब्रह्मणा वै

रम् । सुवीरमिति सु-वीरम् । ब्रह्म । समिदिति सं-इत् । भवति । आहुतीनामित्या-हुतीनाम् । [4]सुवर्गायेति सुवः-गाय । वै । एषः । लोकाय । उपेति । धीयते । यत् । कूर्मः । चतस्रः । आशाः । प्रेति । चरन्तु । अग्नयः । इति । आह ॥ ३४ ॥ दिशः । एव । एतेन । प्रेति । जानाति । इमम् । नः । यज्ञम् । नयतु । प्रजानन्निति प्र-जानन् । इति । आह । सुवर्गस्येति सुवः-गस्य । लोकस्य । अभिनीत्या इत्यभि-नीत्यै । ब्रह्म । समिदिति सं-इत् ।

---

इत्याहुतयोऽग्नयः । संपदाने क्विन्, 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[4]अथात्रैव ब्राह्मणम्—सुवर्गायेत्यादि ॥ गतम् । चतस्र इत्यादि । मन्त्रावयवानां स्तुतिः । अभिनीत्यै आभिमुख्येन नयनाय यत्

देवास्सुवर्गं लोकमायन् यद्ब्रह्मण्व-
त्योपदधाति ब्रह्मणैव तद्यजमान-
स्सुवर्गं लोकमेति प्रजापतिर्वा ए-
ष यदग्निस्तस्य प्रजाः पशवश्छन्दा-
ंसि रूपꣳ सर्वान् वर्णानिष्टकानां
कुर्याद्रूपेणैव प्रजां पशूञ्छन्दाꣳस्य-

भवति । आहुतीनामित्या—हुतीनाम् । इति । आह । ब्रह्मणा । वै । देवाः । सुवर्गमिति सुवः—गम् । लोकम् । आयन्न् । यत् । ब्रह्मण्वत्येति ब्रह्मण्—वत्या । उपदधातीत्युप—दधाति । ब्रह्मणा । एव । तत् । यजमानः । सुवर्गमिति सुवः—गम् । लोकम् । एति । [5]प्रजापतिरिति प्रजा—पतिः । वै । एषः । यत् । अग्निः । तस्य । प्रजा इति प्र—जाः । पशवः । छन्दाꣳसि । रूपम् । सर्वान् । वर्णान् । इष्टकानाम् । कुर्यात् । रूपेण । एव । प्रजामिति प्र—जाम् । पशून् । छन्दाꣳसि । अवेति । रुन्धे । अथो इति । प्रजाभ्य

---

ब्रह्मण्वत्या ऋचा ‘ चतस्र आशाः ’ इत्यनया, ‘ब्रह्म समित् भवति’ इत्यत्र दर्शनात् । ‘ अनो नुट् ’ ॥

[5]प्रजापतिर्वा इत्यादि ॥ प्रजादीनि प्रजापते रूपाणि नः अस्मान् प्रजापत्यात्मनोऽग्नेरवयवभूतानां इष्टकानां सर्वान् सर्ववर्णान्

वं रुन्धेऽथो प्रजाभ्यं एवैनं पशुभ्य-
श्छन्दोभ्योऽवरुध्यं चिनुते॥ ३५ ॥
मयिं गृह्णाम्यग्रें अग्निꣳ रायस्पो-
षाय सुप्रजास्त्वायं सुवीर्याय। मयिं

इतिं प्र–जाभ्यः। एव। एनम्। पशुभ्य इतिं पशु–भ्यः। छन्दोभ्य इति छन्दः–भ्यः। अवरुध्येत्यंव–रुध्यं। चिनुते॥ ३५॥

एति यास्तें अग्ने समिधो यान्यग्नय इत्याहे-
ष्टकानाꣳ षोडंश च ॥ ८ ॥

[1]मयिं। गृह्णामि। अग्रें। अग्निम्। रायः। पोषाय। सुप्रजास्त्वायेतिं सुप्रजाः–त्वायं। सुवी-र्यायेतिं सु–वीर्याय। मयिं। प्रजामितिं प्र–जाम्।

---

कुर्यात् लेखाभिः दक्षिणावृद्धिः तासां प्रजादिभावाय प्रजादीनां च सर्ववर्णत्वात् तथा कृते रूपेणैव प्रजादीनवरुन्धे। ततश्च प्रजापत्यात्माऽग्निः परिगृहीतो भवति। अथो अपि च प्रजादिभ्य एवादायाग्निः चितो भवति, प्रजादीनां इष्टकानां चैतत्स्वभावत्वात्॥

इति पञ्चमे सप्तमे अष्टमोनुवाकः.

---

[1]आत्मन्यग्निं गृहीते—मयि गृह्णामीति द्वाभ्याम्॥ त्रिष्टुप् पुरस्ताज्ज्योतिस्त्रिष्टुप् अक्षराधिका। अग्रें प्रथमं चयनात् पूर्व-

प्र॒जां मयि॒ वर्चो॑ द॒धाम्यरि॑ष्टास्स्याम त॒नुवा॑ सु॒वीराः॑ । यो नो॑ अ॒ग्निः पि॑तरो हृ॒थ्स्व॑न्तरम॑र्त्यो॒ मर्त्या॒ꣳ॒ आ॒वि॒वेश॑ । तम॒ात्मन्परि॑ गृ॒ह्णीमहे व॒यं

मयि॑ । वर्चः॑ । द॒धा॒मि॒ । अरि॑ष्टाः । स्या॒म॒ । त॒नु॒वा॑ । सु॒वीरा॒ इति॑ सु–वीराः॑ । [2]यः । न॒ः । अ॒ग्निः । पि॒त॒रः॒ । हृ॒त्स्विति॑ हृत्–सु । अ॒न्तः । अम॑र्त्यः । मर्त्या॑न् । आ॒वि॒वेशेत्या॑–वि॒वेश॑ । तम् । आ॒त्मन्न् । परीति॑ । गृ॒ह्णी॒म॒हे॒ । व॒यम् । मा । सः । अ॒स्मान् ।

---

मेवाग्निं मयि गृह्णामि रायो धनस्य पोषाय पुष्ट्यर्थं शोभनापत्यत्वाय शोभनवीर्यत्वाय च । व्याख्यातानि पदानि । किं यजमानस्य रायस्पोषाय दद्युरिति, नेत्याह—मयि प्रजां प्रजादिकं च मयि वर्चो बलं च दधामि धारयेय मम तेजो माक्रमेदित्यनेन अभिप्रायेण मयि गृह्णामीति । 'यदध्वर्युरात्मन्' इत्यादिकं ब्राह्मणमिदानीमेव भविष्यति । किञ्च—सर्वेऽपि वयं पुत्रपौत्रादिसहिताः सुवीराश्शोभनापत्या अरिष्टा अनुपहिंसिताश्च तनुवा शोभनेन शरीरेण सहिताः सर्वे स्याम समर्थाश्च ॥

[2]अथ द्वितीया—यो न इति ॥ हे पितरः सर्वस्य पितरः । भूतेन्द्रियाण्यामन्त्र्यन्ते यो नोऽस्मान् हृत्सु हृदयादिषु अन्तर्मध्ये आविवेश अमर्त्यः अमरणधर्मा मर्त्यान् मरणशीलान् अस्मानाविवेश

मा सो अस्मा॑ꣳ अ॑वहाय परा॑ गा
त् । यद॑ध्वर्युरात्मन्नग्निमगृ॑हीत्वाऽग्निं
चि॑नुयाद्योऽस्य स्वो॑ऽग्निस्तमपि॑॥ ३६॥
यज॑मानाय चिनुयाद॒ग्निं खलु वै
प॒शवोऽनूप॑ तिष्ठन्तेऽप॒क्रामु॑का अ-

अवहायेत्य॑व—हाय॑ । परेति॑ । गात् । [3]यत् । अध्व-
र्युः । आत्मन् । अग्निम् । अगृ॑हीत्वा । अग्निम् ।
चिनुयात् । यः । अस्य । स्वः । अग्निः । तम् ।
अपीति॑ ॥ ३६ ॥ यज॑मानाय । चिनुयात् । अ-
ग्निम् । खलु॑ । वै । प॒शवः॑ । अनु॑ । उपेति॑ । ति-
ष्ठन्ते । अपक्रामु॑का इत्य॑प—क्रामु॑काः । अस्मात् ।

तं महानुभावमात्मनि वयं परिगृह्णीमहे । ननु चोक्तमन्तराविवेशेति तत्किमुच्यते आत्मनि परिगृह्णीमहे इति; अत्राभिप्रायमाह— सोऽस्मानपहाय त्यक्त्वा मा परागात् माऽन्यत्र गच्छत्विति । परिग्रहशब्देन अयमर्थो विवक्षित इति दर्शितं भवति ॥

[3]अथात्रैव ब्राह्मणम्—यदध्वर्युरित्यादि ॥ अग्निग्रहणविधानार्थम् । यद्यध्वर्युः आभ्यां मन्त्राभ्यां आत्मन्यग्निमगृहीत्वा अग्निं चिनुयात् योस्याध्वर्योः स्व आत्मनि योग्निः तमपि यजमानाय चिनुयात् चयने जह्यात् ततश्चेतुमुपयान्तं पशवोनूपतिष्ठन्ते पश्चादनुद्रुत्य भजन्ते । संगतिकरण आत्मनेपदम् । एवमेतद्युक्तमिति खलुशब्देन द्योत्यते । ततश्च अस्याध्वर्योरपक्रामुकाः

स्मात्पशवस्स्युर्मयि गृह्णाम्यग्रे अ-
ग्निमित्याहात्मन्नेव स्वमग्निं दाधार
नास्मात्पशवोऽपं क्रामन्ति ब्रह्मवा-
दिनो वदन्ति यन्मृच्चापश्चाग्नेरना-
द्यमथ कस्मान्मृदा चाद्भिश्चाग्निश्ची-

पशवः । स्युः । मयि । गृह्णामि । अग्रे । अग्निम् । इति । आह । आत्मन्न् । एव । स्वम् । अग्निम् । दाधार । न । अस्मात् । पशवः । अपेति । क्रामन्ति । [4]ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । यत् । मृत् । च । आपः । च । अग्नेः । अनाद्यम् । अथ । कस्मात् । मृदा । च । अद्भिरित्यत्–भिः । च । अग्निः । चीयते । इति । यत् । अद्भिरित्यत्–

---

अपक्रमणशीलाः पशवस्स्युः । छान्दस उकञ् । मयि गृह्णामीत्यादिना यथोक्तदोषाभावमाचष्टे । दाधारेति छान्दसो लिट् । धारयन्निति । 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् ॥

[4]ब्रह्मवादिन इत्यादि ॥ मृच्च आपश्चेत्येतदुभयमग्नेरनाद्यमभक्ष्यम् । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । अथ कस्मात्कारणादनेनाभिमतेन अग्निश्चीयते विरुद्धमिव लक्ष्यते एतदिति ब्रह्मवादिन आहुः । उत्तरम्—यदद्भिरिति । यदद्भिर्मृदं संयौति मिश्रयति आपश्च सर्वदेवतार्थाः । तस्मात्तादृश्या मृदा चयनेन सर्वाभिर्देव-

यत इति यदद्भिस्संयौति ॥ ३७ ॥
आपो वै सर्वा देवता देवताभिरेवै-
नꣳ सꣳ सृजति यन्मृदा चिनोतीयं
वा अग्निर्वैश्वानरोऽग्निनैव तदग्निं
चिनोति ब्रह्मवादिनो वदन्ति यन्मृ-
दा चाद्भिश्चाग्निश्चीयतेऽथ कस्माद-

भिः । संयौतीति सं-यौति ॥ ३७ ॥ आपः । वै । सर्वाः । देवताः । देवताभिः । एव । एनम् । सामिति । सृजति । [5]यत् । मृदा । चिनोति । इयम् । वै । अग्निः । वैश्वानरः । अग्निना । एव । तत् । अग्निम् । चिनोति । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । यत् । मृदा । च । अद्भिरित्यत्-भिः । च । अग्निः । चीयते । अथ । कस्मात् । अग्निः । उच्य-

---

ताभिः एनमग्निं संसृजति संयोजयति । तस्मान्मृदा चाद्भिश्च अग्निश्चीयते; न किञ्चिदिह विरुद्धमिति ॥

[5]एवमद्भिश्चयनं प्रयोजनवदित्युक्तम् । इदानीं मृदा चयने यो गुणः तं दर्शयति—यन्मृदेत्यादि ॥ गतम् । ब्रह्मवादिन इत्यादि । पुनरपि पर्यनुयोगान्तरमत्र कुर्वन्ति—ब्रह्मवादिनः मृदाचाद्भिश्चीयमानोऽग्निः कस्मात्संबन्धादग्निरुच्यते । अद्भिर्मृदा काष्ठेन

ग्निरुच्यत इति यच्छन्दोभिश्चिनो-
त्यग्नयो वै छन्दाꣳसि तस्मादग्नि-
रुच्यतेऽथो इयं वा अग्निर्वैश्वानरो
यत् ॥ ३८ ॥ मृदा चिनोति तस्मा-
दग्निरुच्यते हिरण्येष्टका उप दधा-
ति ज्योतिर्वै हिरण्यं ज्योतिरेवास्मि-
न्दधात्यथो तेजो वै हिरण्यं तेज

ते । इति । यत् । छन्दोभिरिति छन्दः–भिः । चि-
नोति । अग्नयः । वै । छन्दाꣳसि । तस्मात् । अ-
ग्निः । उच्यते । अथो इति । इयम् । वै । अग्निः ।
वैश्वानरः । यत् ॥ ३८ ॥ मृदा । चिनोति । त-
स्मात् । अग्निः । उच्यते । [6]हिरण्येष्टका इति हि-
रण्य–इष्टकाः । उपेति । दधाति । ज्योतिः । वै ।
हिरण्यम् । ज्योतिः । एव । अस्मिन्न् । दधाति ।
अथो इति । तेजः । वै । हिरण्यम् । तेजः । एव ।

---

वा निष्पादितं हिरण्मयं भवति, तत्त्वं च विरुद्धमिति । समा-
धत्ते—यच्छन्दोभिरित्यादि । गतम् ॥

[6]हिरण्येष्टका इत्यादि ॥ 'तेजोसि तेजो मे यच्छ'* इत्याद्या
हिरण्येष्टकाष्षष्ठे विहिताः पुनरिह विधीयन्ते अग्नेरात्मीयतासंपादना-

---

*सं. ५-७-६.

एवात्मन्धंत्ते यो वा अग्निꣳ सर्वतो-
मुखं चिनुते सर्वासु प्रजास्वन्नंमत्ति
सर्वा दिशोऽभि जंयति गायत्रीं पु-
रस्तादुपं दधाति त्रिष्टुभं दक्षिणतो
जगंतीं पश्चादंनुष्टुभंमुत्तरतः पङ्क्ति

आत्मन्न् । धत्ते । [7]यः । वै । अग्निम् । सर्वतोमुख-
मिति सर्वतः–मुखम् । चिनुते । सर्वासु । प्रजास्विति
प्र–जासु । अन्नंम् । अत्ति । सर्वाः । दिशः । अभी-
ति । जयति । [8]गायत्रीम् । पुरस्तात् । उपेति । द-
धाति । त्रिष्टुभंम् । दक्षिणतः । जगंतीम् । पश्चात् ।
अनुष्टुभमित्यंनु–स्तुभंम् । उत्तरत इत्युत्–तरतः ।

---

र्थम् । यद्वा—अत्रैवासां विधिः, षष्ठे तु क्रमविधिः । ज्योति-र्वा इत्यादि । गतम् ॥

[7]यो वा अग्निमित्यादि ॥ सर्वासु दिक्षु मुखानि छन्दांसि यस्य स सर्वतोमुखः, सर्वासु वा दिक्षु मुखं चाग्नेरेभिः छन्दोभिः सर्वतोमुखः । सर्वास्विति निर्धारणे सप्तमी । सर्वासु प्रजासु मध्ये अतिशयेनान्नमत्ति । सर्वाश्च दिशोभिजयति ॥

[8]गायत्रीमित्यादि ॥ गतम् । अथो इत्यादि । परस्परसम्बद्धैः छन्दोभिश्चयनात् दिश्येव दिशं प्रवयति । तस्मादिदानीमपि दिशि अन्या दिक् प्रोतेव लक्ष्यते । सर्वा दिशः परस्परं प्रोता इव

मध्यं एष वा अग्निस्सर्वतोमुखस्तं
य एवं विद्वाꣳश्चिनुते सर्वासु प्रजा-
स्वन्नमत्ति सर्वा दिशोऽभि जयत्यथो
दिश्येव दिशं प्र वयति तस्माद्दिशि
दिक्प्रोता ॥ ३१ ॥

प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः

पङ्क्तिम् । मध्ये । एषः । वै । अग्निः । सर्वतोमुख इति सर्वतः-मुखः । तम् । यः । एवम् । विद्वान् । चिनुते । सर्वासु । प्रजास्विति प्र-जासु । अन्नम् । अत्ति । सर्वाः । दिशः । अभीति । जयति । अथो इति । दिशि । एव । दिशम् । प्रेति । वयति । तस्मात् । दिशि । दिक् । प्रोतेति प्र-उता ॥३१॥

अपि सं यौति वैश्वानरो यदेष वै पञ्च-
विꣳशतिश्च ॥ १ ॥

[1]प्रजापतिरिति प्रजा-पतिः । अग्निम् । असृ-

भवन्ति । कोणासु दिक्षु अन्यासामनुप्रविष्टत्वात् प्रोता इत्युच्यन्ते । वेञः निष्ठायां संप्रसारणं, 'शतुरनुमः' इति गतेः प्रकृतिस्वरत्वम् ॥

इति पञ्चमे सप्तमे नवमोनुवाकः.

---

[1]प्रजापतेरित्यादि पशुशिरसां विधिः ॥ प्रजापतिना सृष्टोग्नि-रस्मात्प्रजापतेः प्राङ्मुखतः प्राद्रवत् । तस्मै तन्निवृत्त्यर्थं अश्वं

प्राङ्ङाद्रवत्तस्मा अश्वं प्रत्यास्यत्स दक्षिणाऽवर्तत तस्मै वृष्णिं प्रत्यास्यत्स प्रत्यङ्ङाऽवर्तत तस्मा ऋषभं प्रत्यास्यत्स उदङ्ङाऽवर्तत तस्मै बस्तं प्रत्यास्यत्स ऊर्ध्वोऽद्रवत्तस्मै पुरुषं प्रत्यास्यद्यत्पशुशीर्षाण्युपदधाति सर्वत एवैनम् ॥ ४० ॥ अवरुध्यं

जत। सः। अस्मात्। सृष्टः। प्राङ्। प्रेति। अद्रवत्। तस्मै। अश्वम्। प्रतीति। आस्यत्। सः। दक्षिणा। एति। अवर्तत। तस्मै। वृष्णिम्। प्रतीति। आस्यत्। सः। प्रत्यङ्। एति। अवर्तत। तस्मै। ऋषभम्। प्रतीति। आस्यत्। सः। उदङ्। एति। अवर्तत। तस्मै। बस्तम्। प्रतीति। आस्यत्। सः। ऊर्ध्वः। अद्रवत्। तस्मै। पुरुषम्। प्रतीति। आस्यत्। यत्। पशुशीर्षाणीति पशु–शीर्षाणि। उपदधातीत्युप–दधाति। सर्वतः। एव। एनम् ॥ ४० ॥ अवरुध्ये-

प्रत्यास्यत् प्रातिकूल्येनाग्रतः क्षिप्तवान्, अश्वेन प्रतिरुद्धवानिति यावत्। ततस्सोग्निरावृत्य दक्षिणस्यां दिशि आवर्तत। ततो सक्तुं (?) तस्मै वृष्णिं प्रत्यास्यत्। एवं सर्वत्र। दक्षिणादाच्। तस्मात्पशुशिरसामुपधानेन सर्वतो रुद्धस्य सर्वाभ्यो दिग्भ्यो निर्निरुद्धोग्निश्श्रितो भवति ॥

चिनुत एता वै प्राणभृतश्चक्षुष्मतीरि-
ष्टका यत्पशुशीर्षाणि यत्पशुशीर्-
षाण्युपदधाति ताभिरेव यजमानोऽ-
मुष्मिन्लोके प्राणित्यथो ताभिरेवा-
स्मा इमे लोकाः प्र भान्ति मृदाऽभि-
लिप्योप दधाति मेध्यत्वाय पशुर्वा ए-

त्यव-रुध्यं । चिनुते । [2]एताः । वै । प्राणभृत इति प्राण-भृतः । चक्षुष्मतीः । इष्टकाः । यत् । पशुशीर्षाणीति पशु-शीर्षाणि । यत् । पशुशीर्षाणीति पशु-शीर्षाणि । उपदधातीत्युप-दधाति । ताभिः । एव । यजमानः । अमुष्मिन्न् । लोके । प्रेति । अनिति । अथो इति । ताभिः । एव । अस्मै । इमे । लोकाः । प्रेति । भान्ति । [3]मृदा । अभिलिप्येत्यभि-लिप्य । उपेति । दधाति । मेध्यत्वायेति मेध्य-त्वाय । [4]पशुः । वै ।

---

[2]एता वा इत्यादि ॥ भूतपूर्वं प्राणभृत्त्वं चक्षुष्मत्त्वं च शिरस्सूपचर्यते । उपधेयत्वाच्चेष्टकात्वम् । तदुपधानेन यजमानोमुष्मिन् लोके प्राणिति जीवति । लोकाश्चेमे अस्मै प्रभान्ति प्रकर्षेण प्रकाशन्ते उपकारका भवन्ति ॥

[3]मृदाऽभिलिप्येति विधिः ॥

[4]पशुर्वा इत्यादि ॥ पशुशिरस्सु गुणविध्यर्थम् । पशुसाधनत्वात्

ष यदग्निरन्नं पशवं एष खलु वा अग्नि-
र्यत्पंशुशीर्षाणि यं कामयेत कनीयो-
स्यान्नम्॥४१॥स्यादितिं सन्तरां तस्यं
पशुशीर्षाण्युपं दध्यात्कनीय एवा-
स्यान्नं भवति यं कामयेत समाव-
दस्यान्नꣳ स्यादितिं मध्यतस्तस्योपं

एषः । यत् । अग्निः । अन्नम् । पशवंः । एषः । खलुं । वै । अग्निः । यत् । पशुशीर्षाणीतिं प-शु-शीर्षाणिं । यम् । कामयेत । कनीयः । अ-स्य । अन्नम् ॥ ४१ ॥ स्यात् । इतिं । संतरामि-तिं सं-तराम् । तस्यं । पशुशीर्षाणीतिं पशु-शीर्षाणिं । उपेतिं । दध्यात् । कनीयः । एव । अस्य । अन्नम् । भवति । यम् । कामयेत । समा-वंत् । अस्य । अन्नम् । स्यात् । इतिं । मध्यतः ।

---

पशवोग्निः । अन्नसाधनत्वात् अन्नं पशवः । किञ्च—एषोग्निरेव पशुशीर्षाणि, अवयवावयविनोरभिन्नत्वात् पशुत्वस्य च समानत्वात् । तस्माद्यजमानमध्वर्युः कामयते कनीयोल्पतरं अस्यान्नं स्यादिति तस्य संतरां सन्निकृष्टतराणि पशुशीर्षाण्युपदध्यात् । 'किमेत्तिङव्यय' इत्यामुप्रत्ययः । कनीय एवेत्यादि । गतम् । समावत् समम् । समादावतुप् स्वार्थिकः । मध्यतो नातिसन्निकृष्टा

दध्याथ्समावदेवास्यान्नं भवति यं कामयेत भूयोस्यान्नꣳ स्यादित्यन्तेषु तस्य व्युदूह्योप दध्यादन्तत एवास्मा अन्नमव रुन्धे भूयोस्यान्नं भवति ॥ ४२ ॥

स्तेगान्दꣳष्ट्राभ्यां मण्डूकाञ्जम्भ्येभि-

तस्य । उपेति । दध्यात् । समावत् । एव । अस्य । अन्नम् । भवति । यम् । कामयेत । भूयः । अस्य । अन्नम् । स्यात् । इति । अन्तेषु । तस्य । व्युदूह्येति वि-उदूह्य । उपेति । दध्यात् । अन्ततः । एव । अस्मै । अन्नम् । अवेति । रुन्धे । भूयः । अस्य । अन्नम् । भवति ॥ ४२ ॥

एनमस्यान्नं भूयोस्यान्नं भवति ॥ १० ॥

[1]स्तेगान् । दꣳष्ट्राभ्याम् । मण्डूकान् । जम्भ्ये-

दिक् । भूयः बहुतरम् । अन्तेष्वित्यादि । अन्तेषु प्रान्तेषु व्युदूह्य व्युदूह्योपदध्यात् । अन्ततो दिगन्तेभ्योस्मै यजमानायान्नमवरुन्धे । ततो बहुतरं तस्यान्नं भवति ॥

इति पञ्चमे सप्तमे दशमोनुवाकः.

---

[1]समन्तकः सब्राह्मणोऽग्निस्समाप्तः । अतः परमश्वमेधकाण्डं वैश्वदेवम् । तत्र हविषा प्रचर्याज्यमवदानं कृत्वा 'स्तेगान्'

रादंकां खादेनोर्जं॑ सꣳसूदेनारंण्यं जाम्बींलेन मृदं बस्वैंभिश्शर्कैंराभिरवंकामवंकाभिश्शर्कैंरामुत्सादेनं

भिः । आदंकाम् । खादेनं । ऊर्जम् । सꣳसूदेनेति सं—सूदेनं । अरंण्यम् । जाम्बींलेन । मृदंम् । बस्वैंभिः । शर्कैंराभिः । अवंकाम् । अवंकाभिः । शर्कैंराम् । उत्सादेनेत्युंत्—सादेनं । जिह्वाम् । अ-

इत्यादिचतुर्दशभिरनुवाकैः प्रतिमन्त्रं शरीरहोमं जुहोति । अत्र द्वितीयया निर्दिष्टा देवताः स्तेगाद्याः । तृतीयानिर्दिष्टान्यश्वस्याङ्गानि दंष्ट्रादीनि । इमां देवतामनेन अश्वेन यजामीति होमकाल उभयं स्मर्तव्यमिति मन्त्राभिप्रायः । अत्र ब्राह्मणं 'वैश्वदेवो वा अश्वः । तं यत्प्राजापत्यं कुर्यात् । समदं दधाति'* इति । स्तेगाः क्षुद्रजन्तुविशेषाः गोकर्णकण्टका† इति प्रसिद्धाः । महाकण्टका इत्यन्ये । तदधिष्ठातृदेवता गृह्यते । दंष्ट्रे दन्ते उन्नते । मण्डूकाः प्रसिद्धाः । तद्दन्तमूलं जम्भः तत्र भवा जम्भ्याः पार्श्वदन्ताः । यद्वा—स्वार्थिको यत् । आदका भक्षयित्री प्राणाभिमानिनी देवता । पावकादित्वादित्वाभावः । खादः दन्तः येन खाद्यन्ते । करणे घञ्, 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । ऊर्क् रसः । तदभिमानिनी देवता सर्वत्र ग्राह्या । संसूदः सन्ततक्षरणो नासिकादिः । थाथादिना उत्तरपदान्तोदात्तत्वम् । आरण्यं प्रसिद्धम् । जाम्बीलं भक्षिततृणादि यत्र निधीयते आमा-

*ब्रा. ३-९-११. †श्वोकण्टका.

जिह्वामवक्रन्देन तालुꣳ सरस्वतीं
जिह्वाग्रेणं ॥ ४३ ॥
वाजꣳ हनूभ्यामप आस्येनादित्या-
ञ्छ्मश्रुभिरुपयाममधरेणोष्ठेन सदुत्तं-

वक्रन्देनेत्यव-क्रन्देनं । तालुम् । सरस्वतीम् । जि-ह्वाग्रेणेति जिह्वा-अग्रेणं ॥ ४३ ॥

स्तेगान्द्वाविꣳशतिः ॥ ११ ॥

[1]वाजंम् । हनूभ्यामिति हनु-भ्याम् । अपः । आस्येन । आदित्यान् । श्मश्रुभिरिति श्मश्रु-भिः । उपयाममित्युप-यामम् । अधरेण । ओष्ठेन । सत् । उत्तरेणेत्युत्-तरेण । अन्तरेण । अनू-

शय इति प्रसिद्धम् । मृत् प्रसिद्धा । वर्स्वः दन्तमूलमांसादीनि । शर्कराः तत्सदृशान्यस्थीनि । अवका अवित्री देवता अग्निस्थानाभिमानिनी । पूर्ववदित्वाभावः । शैवालाभिमानिनी वा गृह्यते । अवकाः शैवालसदृशानि मांसानि । अस्थिविशेषा इत्यन्ये । शर्कराः प्रसिद्धाः । उत्सादः उच्चप्रदेशः । जिह्वा प्रसिद्धा । अवक्रन्दः आन्तःकायिकः । तालुः शब्दाभिव्यक्तिस्थानं जिह्वामूलम् । सरस्वतीं जिह्वाग्रेण । गतम् ॥

इति पञ्चमे सप्तमे एकादशोनुवाकः.

---

[1]वाजोऽन्नम् । हन्वादीनि प्रसिद्धानि । हनूभ्यामिति छान्दसं सांहितिकं दीर्घत्वम् । उपयामः पृथिवी । अधरेणोष्ठेन । गतम् ।

रेणान्तरेणानूकाशं प्रकाशेन बाह्यꣳ स्तनयित्नुं निर्बाधेन सूर्याग्नी चक्षुर्भ्यां विद्युतौ कनीनकाभ्यामशनिं मस्तिष्केण बलं मज्जभिः ॥४४॥

काशमित्यनु—काशम् । प्रकाशेनेति प्र—काशेन । बाह्यम् । स्तनयित्नुम् । निर्बाधेनेति निः—बाधेन । सूर्याग्नी इति सूर्य—अग्नी । चक्षुर्भ्यामिति चक्षुः—भ्याम् । विद्युताविति वि—द्युतौ । कनीनकाभ्याम् । अशनिम् । मस्तिष्केण । बलम् । मज्जभिरिति मज्ज—भिः ॥ ४४ ॥

वाजं पञ्चविꣳशतिः ॥ १२ ॥

---

'ओत्वोष्ठयोः' इति पररूपत्वम् । सत् द्यौः, सीदन्त्यस्यां पुण्यकृत इति । उत्तरेण ओष्ठेनेत्येव । अन्तरं ओष्ठयोर्मध्यम् । अनूकाशः द्यावापृथिव्योर्मध्यं, अनुक्रमेण काशन्ते भासन्ते अस्मिन् ज्योतींषि । 'इकः काशे' इति सांहितिकं दीर्घत्वम् । प्रकाशः आभ्यन्तरं प्रकाशस्थानम् । बाह्यं बहिर्भवं प्रकाशस्थानं दिगादिः। 'बहिषष्टिलोपो यञ्च' इति यञ् । स्तनयित्नुः प्रसिद्धः । निर्बाधः कनशब्दः । सूर्याग्नी चक्षुर्भ्याम् । गतम् । विद्युतौ वृष्टिरवृष्टिः । कनीनके अक्षिस्थे कृष्णमण्डले । अशनिः प्रसिद्धः । मस्तिष्कः । शिरोमांसम् । बलं मज्जभिः ॥

इति पञ्चमे सप्तमे द्वादशोनुवाकः

कूर्मा॑ञ्छ॒फैर॑च्छ॒ल्ला॑भिः क॒पिञ्ज॑ला-
न्थ्साम॒ कुष्ठि॑काभिर्ज॒वं जङ्घा॑भिर-
ग॒दं जानु॑भ्यां वी॒र्यं॑ कु॒हाभ्यां॑ भ॒यं
प्र॑चा॒लाभ्यां॑ गु॒होप॑प॒क्षाभ्या॑म॒श्विना॒-
व॑ꣳसाभ्या॒मदि॑तिꣳ शी॒र्ष्णा निरृ॑-
तिं॒ निर्जा॑ल्मकेन शी॒र्ष्णा ॥ ४५ ॥

[1]कू॒र्मान् । श॒फैः । अ॒च्छ॒ल्ला॑भिः । क॒पिञ्ज॑लान् । साम॑ । कुष्ठि॑काभिः । ज॒वम् । जङ्घा॑भिः । अ॒ग॒दम् । जानु॑भ्या॒मिति॒ जानु॑-भ्या॒म् । वी॒र्य॑म् । कु॒हाभ्या॑म् । भ॒यम् । प्र॒चा॒लाभ्या॒मिति॑ प्र-चा॒लाभ्या॑म् । गु॒हा॑ । उ॒प॒प॒क्षाभ्या॒मित्यु॑प-प॒क्षाभ्या॑म् । अ॒श्विनौ॑ । अꣳसा॑भ्याम् । अदि॑तिम् । शी॒र्ष्णा ।

[1]कूर्मान् शफैः । गतम् । अच्छलाः शफलमूलमांसानि । कपिञ्जलाः प्रसिद्धाः । साम गीतिः । कुष्ठिका प्रकोष्ठजङ्घाभ्योऽधःप्रदेशः । जवो वेगः । जङ्घा जानुभ्योऽधःप्रदेशः । अगदः आरोग्यम् । जानुनी पादयोर्मध्यसन्धी । वीर्यं बलम् । कुहः हस्तयोर्मध्यसन्धिः । भयं गतम् । प्रचालौ पादयोरुपरिप्रदेशौ । गुहा गोहनी मूर्छाऽस्य 'सुपां सुलुक्' इति द्वितीयाया लुक् । उपपक्षौ पार्श्वे । अश्विनावंसाभ्याम् । गतम् । अदितिर्देवमाता । शीर्ष्णा शिरसा । 'शीर्षञ्छन्दसि' इति शीर्षादेशः, तस्यान्तोदात्तत्वात्

योक्त्रं गृध्राभिर्युगमानतेन चित्तं म-
न्याभिस्संक्रोशान्प्राणैः प्रकाशेन त्व-
चं पराकाशेनान्तरां मशकान्केशैरि-

निर्ऋतिमिति निः-ऋतिम् । निर्जाल्मकेनेति निः-जाल्मकेन । शीर्ष्णा ॥ ४५ ॥

कूर्मान्त्रयोविंशतिः ॥ १३ ॥

[1]योक्त्रम् । गृध्राभिः । युगम् । आनतेनेत्या-नतेन । चित्तम् । मन्याभिः । संक्रोशानिति सं-क्रोशान् । प्राणैरिति प्र-अनैः । प्रकाशेनेति प्र-काशेन । त्वचम् । पराकाशेनेति परा-काशेन । अन्तराम् । मशकान् । केशैः । इन्द्रम् । स्वपसेति

---

उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । निरृतिः प्रसिद्धा । नि-र्जाल्मकं शुद्धं केशरहितम् ॥

इति पञ्चमे सप्तमे त्रयोदशोनुवाकः.

---

[1]योक्त्रं गतम् । गृध्राः अक्षाः । युगं प्रसिद्धम् । आनतं ग्रीवाप्रदेशः । चित्तं प्रसिद्धम् । मन्या ग्रीवारेखाः । सिरा वा तत्रस्थाः । संक्रोशा घोषाः । प्राणाः चक्षुरादयः । प्रकाशः बाह्यं रूपम् । त्वक् त्वगिन्द्रियादीनि । पराकाशः आभ्य-न्तरं रूपम् । अन्तरा त्वगिन्द्रियाभिमानिनी । मशकान् केशैः ।

न्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन रथमुष्णिहाभिः ॥ ४६ ॥ मित्रावरुणौ श्रोणीभ्यामिन्द्राग्नी शिखण्डाभ्यामिन्द्राबृहस्पती ऊरुभ्यामिन्द्राविष्णू अष्ठीवद्भ्याꣳ सवि-

सु–अपसा । वहेन । बृहस्पतिम् । शकुनिसादेनेति शकुनि–सादेन । रथम् । उष्णिहाभिः ॥ ४६ ॥

योक्त्रमेकविꣳशतिः ॥ १४ ॥

[1]मित्रावरुणाविति मित्रा–वरुणौ । श्रोणीभ्यामिति श्रोणि-भ्याम् । इन्द्राग्नी इतीन्द्र–अग्नी । शिखण्डाभ्याम् । इन्द्राबृहस्पती इतीन्द्रा–बृहस्पती ।

---

इन्द्रः प्रसिद्धः । स्वपसा शोभनकर्मणा वहेन कण्ठावलम्बेन। 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् । बृहस्पतिः प्रसिद्धः । सुट्स्वरावुक्तौ । शकुनिसादः पृष्ठं यत्र शकुनाः शक्ता धीराः सीदन्ति । रथः प्रसिद्धः । उष्णिहाः शिरोवेष्टनसदृशाः केशनिवहाः ॥

इति पञ्चमे सप्तमे चतुर्दशोनुवाकः.

---

[1]मित्रावरुणौ श्रोणीभ्यां गतः । प्रथमस्य 'देवताद्वन्द्वे च' इत्युत्तरपदपरत्वात् आनङ् । द्वितीयस्य संहितायां छान्दसं दीर्घत्वम् । इन्द्राग्नी प्रसिद्धे । 'नोत्तरपदेऽनुदात्तादौ' इत्याद्युदा-

भिस्समुद्रमुदरेण वैश्वानरं भस्म-
ना ॥ १८ ॥
पूष्णो वनिष्ठुरन्धाहेस्स्थूरगुदा सर्पा-
न्गुदाभिर् ऋतून्पृष्टीभिर्दिवं पृष्ठेन
वसूनां प्रथमा कीकसा रुद्राणां द्वि-

क्लोम्ना । गिरीन् । प्लाशिभिरिति प्लाशि–भिः । स-
मुद्रम् । उदरेण । वैश्वानरम् । भस्मना ॥ १८ ॥
इन्द्रस्य द्वाविंशतिः ॥ १६ ॥

[1]पूष्णः । वनिष्ठुः । अन्धाहेरित्यन्ध–अहेः ।
स्थूरगुदेति स्थूर–गुदा । सर्पान् । गुदाभिः । ऋ-
तून् । पृष्टीभिरिति पृष्टि–भिः । दिवम् । पृष्ठेन ।

---

विशेषेण । वल्मीकाः प्रसिद्धाः । क्लोम्ना आम्रफलसदृशेन मां-
सेन । गिरयः प्रसिद्धाः । प्लाशिभिः पल्लवर्णाकारैः मांसैः ।
समुद्रः प्रसिद्धः । उदरेण उदरस्थेन केनचिदपि मांसेन । वैश्वा-
नरः प्रसिद्धः । भस्मना अनेन दृश्यतृणादि* ॥

इति पञ्चमे सप्तमे षोडशोनुवाकः.

---

[1]पूष्णो वनिष्ठुः । पूर्ववत् षष्ठीनिर्दिष्टा देवता । गुदसदृशं मांसं
वनिष्ठुः । अन्धाहेः स्थूरगुदा 'सर्पान् गुदाभिः' इति वक्ष्यमा-
णस्य अयं पुरस्तादपवादः । गुदमूलं स्थूरगुदा । कपिलकादि-

---

*भस्म जीर्णतृणादि इति माधवीये.

तीयाऽऽदित्यानां तृतीयाऽङ्गिरसां
चतुर्थी साध्यानां पञ्चमी विश्वेषां
देवानाꣳ षष्ठी ॥ ४१ ॥
ओजो ग्रीवाभिर्निर्ऋतिमस्थभिरि-

वसूनाम् । प्रथमा । कीकसा । रुद्राणाम् । द्विती-
या । आदित्यानाम् । तृतीया । अङ्गिरसाम् । च-
तुर्थी । साध्यानाम् । पञ्चमी । विश्वेषाम् । देवा-
नाम् । षष्ठी ॥ ४१ ॥

पूष्णश्चतुर्विꣳशतिः ॥ १७ ॥

[1]ओजः । ग्रीवाभिः । निर्ऋतिमिति निः—ऋ-
तिम् । अस्थभिरित्यस्थ—भिः । इन्द्रम् । स्वपसेति

---

त्वाच्छत्वविकल्पः । सर्पाः प्रसिद्धाः । गुदाः गुदभागाः । ऋतवः प्रसिद्धाः । पृष्ट्यो बाह्वोरुपरिस्थितान्यस्थीनि । छान्दसं सांहितिकं दीर्घत्वम् । द्यौः प्रसिद्धा । पृष्टं ग्रीवोपरिस्थितं वंशास्थि । वसूनां प्रथमा कीकसेति । ग्रीवाया आरभ्य पृष्ठवंशस्थितान्यस्थिगोळकानि क्रमेण वस्वादीनाम् ॥

इति पञ्चमे सप्तमे सप्तदशोनुवाकः.

---

[1]*अथाष्टमगतान्मन्त्रानाह—ओजो ग्रीवाभिरिति ॥ ग्रीवास्त-

---

*अत्रोपलभ्यमानेषु कोशेषु क्वापि एतदष्टादशानुवाकस्य भाष्यादर्शनात् माधवीयं भाष्यं योजितम्.

न्द्रꣳ स्वपंसा वहेन रुद्रस्य विचल-
स्स्कन्धोऽहोरात्रयोर्द्वितीयोऽर्धमासा-
नां तृतीयो मासां चतुर्थ ऋतूनां
पञ्चमस्संवथ्सरस्यं षष्ठः ॥ ५० ॥
आनन्दं नन्दथुना कामं प्रत्यासा-

सु-अपंसा । वहेन । रुद्रस्य । विचल इति वि-चलः । स्कन्धः । अहोरात्रयोरित्यहः-रात्रयोः । द्वितीयः । अर्धमासानामित्यर्ध-मासानाम् । तृतीयः । मासाम् । चतुर्थः । ऋतूनाम् । पञ्चमः । संवत्सरस्येति सं-वत्सरस्य । षष्ठः ॥ ५० ॥

ओजो विꣳशतिः ॥ १८ ॥

[1]आनन्दमित्या-नन्दम् । नन्दथुना । कामम् ।

---

दवयवाः । अस्थीनि तत्रत्यानि । योऽयं वहो वहनयोग्यप्रदेशः स्वपाः शोभनकर्मा वहेनेत्यन्तः स्वपाः सोयमिन्द्रस्य भागः । स्कन्धोऽवयवभेदेन षोढा भिन्नः । तत्रात्यन्तचञ्चलोऽवयवो रुद्रस्य । तत्तदनन्तरभाविनोऽहोरात्रादीनाम् ॥

इति माधवीये पञ्चमे सप्तमे अष्टादशोनुवाकः.

---

[1]आनन्दः प्रसिद्धः । नन्दथुः प्रजननसुखम् । 'द्वितोऽथुच्' । कामः प्रसिद्धः । प्रत्यासौ प्रास्यो त्वचौ प्रत्यस्यते प्रक्षिप्यते याभ्यां

भ्याँ भयꣳ शितीमभ्याँ प्रशिषँ प्रशासाभ्याꣳ सूर्याचन्द्रमसौ वृक्याभ्याꣳ श्यामशबलौ मतस्नाभ्यां व्युष्टिꣳ रूपेण निम्रुक्तिमरूपेण॥५१

प्रत्यासाभ्यामिति प्रति-आसाभ्याम् । भयम् । शितीमभ्यामिति शितीम-भ्याम् । प्रशिषमिति प्र-शिषम् । प्रशासाभ्यामिति प्र-शासाभ्याम् । सूर्याचन्द्रमसाविति सूर्या-चन्द्रमसौ । वृक्याभ्याम् । श्यामशबलाविति श्याम-शबलौ । मतस्नाभ्याम् । व्युष्टिमिति वि-उष्टिम् । रूपेण । निम्रुक्तिमिति नि-म्रुक्तिम् । अरूपेण ॥ ५१ ॥

आनन्दꣳ षोडश ॥ १९ ॥

---

प्रजननम् । असेः करणे घञ् । थाथादिनोत्तरपदान्तोदात्तत्वम् । भयं प्रसिद्धम् । शितीमभ्यां उदगेरशुक्लाभ्यां? स्थानाभ्याम् । द्रव्याभ्यामितीत्यन्ये । गुणेन गुणिनो लक्षणमिति इमनिच्, तस्य छान्दसं दीर्घत्वम् । प्रशिषं प्रशासकम् । शासः क्कौ उपधाया इत्वम् । प्रशासौ अक्षिगोळके प्रकर्षेण शात्यसभ्यां प्रमेयमिति पूर्ववत्प्रत्ययः स्वरश्च । सूर्याचन्द्रमसौ प्रसिद्धौ । वृक्याभ्यां स्वल्पाम्रफलसदृशाभ्यां मांसाभ्याम् । श्यामशबलौ तमःप्रकाशौ मतस्नाभ्यां महासिराभ्याम् । व्युष्टिं प्रभातम् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम्, 'उदात्तस्वरितयोर्यणः' इतीकारस्स्वर्यते । रूपेण शुक्लादि-

तां॑ स॒प्तमी॒ बृह॒स्पते॑रष्ट॒मी मि॒त्रस्य॑
न॒वमी॒ वरु॑णस्य दश॒मीन्द्र॑स्यैकाद॒शी
विश्वे॑षां दे॒वानां॑ द्वाद॒शी द्यावा॑पृथि॒-
व्योः॑ पा॒र्श्वं य॒मस्य॑ पाटू॒रः ॥५३॥
वा॒योः प॒क्षति॒स्सर॑स्वतो॒ निप॑क्षति-

सं॒—व॒त्स॒रस्य॑ । ष॒ष्ठी । म॒रुता॑म् । स॒प्तमी । बृह॒-स्पते॑ः । अ॒ष्टमी । मि॒त्रस्य॑ । न॒वमी । वरु॑णस्य । द॒श॒मी । इन्द्र॑स्य । ए॒का॒द॒शी । विश्वे॑षाम् । दे॒वा-नां॑म् । द्वा॒द॒शी । द्यावा॑पृथि॒व्योरिति॒ द्यावा॑—पृथि॒-व्योः । पा॒र्श्वम् । य॒मस्य॑ । पा॒टू॒रः ॥ ५३ ॥

अ॒ग्नेरे॒का॒न्नत्रि॒ꣳ॒श॒त् ॥ २१ ॥

[1]वा॒योः । प॒क्ष॒तिः । सर॑स्वतः । निप॑क्षति॒रिति॒

---

स्वक्तव्यः’ इति णसि ‘सिति च’ इति पदत्वादोर्गुणाभावः। पर्शवः पार्श्ववङ्क्रयः । ‘देवताद्वन्द्वे च’ इति द्यावापृथिवीशब्द आद्युदात्तः, ‘नोत्तरपदे’ इति प्रतिषेधे पृथिव्यादिपर्युदासात् ‘उदात्तयणः’ इति विभक्तेरुदात्तत्वम् । यमस्य पाटूरः सर्वपशुविधारणोस्थिविशेषः ॥

इति पञ्चमे सप्तमे एकविंशोनुवाकः

---

[1]वायोः पक्षतिः पार्श्वान्तं पूर्वेण व्याख्यातम् ॥

इति पञ्चमे सप्तमे द्वाविंशोनुवाकः.

---

श्चन्द्रमसस्तृतीया नक्षत्राणां चतुर्थी सवितुः पञ्चमी रुद्रस्य षष्ठी सर्पाणाꣳ सप्तम्यर्यम्णोऽष्टमी त्वष्टुर्नवमी धातुर्दशमीन्द्राण्या एकादश्यदित्यै द्वादशी द्यावापृथिव्योः पार्श्वं यम्यै पाटूरः ॥ ५४ ॥

पन्थामनूवृग्भ्याꣳ संततिꣳ स्नावन्याभ्याꣳ शुकान्पित्तेन हरिमाणं

नि-पक्षतिः । चन्द्रमसः । तृतीया । नक्षत्राणाम् । चतुर्थी । सवितुः । पञ्चमी । रुद्रस्य । षष्ठी । सर्पाणाम् । सप्तमी । अर्यम्णः । अष्टमी । त्वष्टुः । नवमी । धातुः । दशमी । इन्द्राण्याः । एकादशी । अदित्यै । द्वादशी । द्यावापृथिव्योरिति द्यावा-पृथिव्योः । पार्श्वम् । यम्यै । पाटूरः ॥ ५४ ॥

वायोरष्टाविꣳशतिः ॥ २२ ॥

पन्थाम् । अनूवृग्भ्यामित्यनूवृक्-भ्याम् । संततिमिति सं-ततिम् । स्नावन्याभ्याम् । शुकान् ।

---

[1]पन्थाः प्रसिद्धः । द्वितीयाया अप्याकारश्छान्दसः । अनूवृग्भ्यां अनुवृत्ताभ्यां सिराविशेषाभ्याम् । वर्णव्यत्ययेन ककारः ।

यक्रा हलीक्ष्णान्पापवातेन कूश्मा-
ञ्छकंभिश्शवर्तानूवध्येन शुनो वि-
शसनेन सर्पान्लोहितगन्धेन वयाꣳ-
सि पक्कगन्धेन पिपीलिकाः प्रशा-
देन ॥ ५५ ॥

पित्तेन । हरिमाणम् । यक्रा । हलीक्ष्णान् । पाप-
वातेनेति पाप-वातेन । कूश्मान् । शकंभिरिति
शकं-भिः । शवर्तान् । ऊवध्येन । शुनः । विश-
सनेनेति वि-शसनेन । सर्पान् । लोहितगन्धेनेति
लोहित-गन्धेन । वयाꣳसि । पक्कगन्धेनेति पक्क-
गन्धेन । पिपीलिकाः । प्रशादेनेति प्र-शादेन ॥५५

पन्था द्वाविꣳशतिः ॥ २३ ॥

---

'न हि वृति' इत्यादिना दीर्घत्वम् । सन्ततिः प्रसिद्धा, स्नावा-
नस्सिराः स्नावभ्योऽभितः स्नावन्यौ सर्वसिरानुग्राहिण्यौ सिराविशेषौ
पार्श्वयोः । स्वार्थिको वा यत् । शुकान् पित्तेन गतम् । हरि-
माणं कामिलादि हरिणस्वभावम् । 'तुरिष्ठेमेयस्सु' इति टिलो-
पः । यक्रा मांसपिण्डविशेषेण वर्तुलाकारेण । 'पद्दन्' इत्या-
दिना यकृच्छब्दस्य यकन्नादेशः । हलीक्ष्णान् तृणासिंह्मान् । पा-
पवातेन आमवालजाः क्षुद्रजन्तवः । ऊवध्येन उदरस्थेन पुरीषे-
ण । श्वानः प्रसिद्धाः । विशसनेन शस्त्रादिलग्नेन मांसेन ।

क्रमैरत्यंक्रमीद्वाजी विश्वैर्दे॒वैर्य॒ज्ञियैः॒ स्संवि॒दा॒नः । स नो॑ नय सु॒कृत॑स्य लो॒कं तस्यं ते व॒यꣳ स्व॒धया॑ मदेम ॥ ५६ ॥

[1]क्रमैः । अतीति॑ । अ॒क्र॒मी॒त् । वा॒जी । विश्वैः । दे॒वैः । य॒ज्ञियैः । सं॒वि॒दा॒न इति॑ सं–वि॒दा॒नः । सः । नः । न॒य । सु॒कृत॒स्येति॑ सु–कृत॑स्य । लो॒कम् ।

---

सर्पान् लोहितगन्धेन रुधिरगन्धेन । वयांसि पक्कगन्धेन पाकजेन मांसेन । पिपीलिकाः प्रशादेन भूमौ विशीर्णेन । शद निशातने । पूर्वपदान्तोदात्तत्वम् ॥

इति पञ्चमे सप्तमे त्रयोविंशोनुवाकः.

---

[1]अथ 'चित्तं सन्तानेन '* इत्यादि चतुर्दशानुवाकः आरण्यानुवाक्यः 'प्रयासाय स्वाहा'* इति पञ्चदश आरण्योनुवाक्यः परस्ताद्व्याख्यास्येते । ब्राह्मणं च भवति—'चतुर्दशैताननुवाकान् जुहोत्यनन्तरित्यै। प्रयासाय स्वाहेति पञ्चदशम् '† इति। अथोत्तराभ्यामनुवाकाभ्यां अश्वस्य हृदयमभिमन्त्रयते। क्रमैरिति पुरुस्ताज्ज्योतिषा त्रिष्टुभा ॥ क्रमैरात्मीयैः पादविक्षेपैः अयं वाजी अत्यक्रमीत् अन्यानत्यागच्छत् महानुभावः सञ्जातः । तदेवाह—विश्वैर्देवैर्यज्ञियैः यज्ञार्हैः देवः संविदानः ऐकमत्यं गतः। 'समोगम्पृच्छि ' इत्यात्मनेपदम्। कर्मणि वा लटि व्यत्ययेन यगभावः । ज्ञायमान इत्यर्थः । स त्वमस्मान्

---

*सं.१-४-३६, ३५. †ब्रा. ३-९-११.

द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽ-
न्तरिक्षꣳ समुद्रो योनिस्सूर्यस्ते च-
क्षुर्वातः प्राणश्चन्द्रमाश्श्रोत्रं मासा-
श्चार्धमासाश्च पर्वाण्यृतवोऽङ्गानि सं-
वथ्सरो महिमा ॥ ५७ ॥

तस्य । ते । वयम् । स्वधयेति स्व—धया । म-
देम ॥ ५६ ॥

क्रमैरष्टादश ॥ २४ ॥

[1]द्यौः । ते । पृष्ठम् । पृथिवी । सधस्थमिति स-
ध—स्थम् । आत्मा । अन्तरिक्षम् । समुद्रः । यो-
निः । सूर्यः । ते । चक्षुः । वातः । प्राण इति प्र—
अनः । चन्द्रमाः । श्रोत्रम् । मासाः । च । अर्धमा-
सा इत्यर्ध—मासाः । च । पर्वाणि । ऋतवः । अ-

सुकृतस्य सुष्ठुकृतस्य कर्मणः फलभूतं लोकं स्थानं नय प्रा-
पय । 'सूपमानात्क्तः' इति सुकृतशब्दोन्तोदात्तः । तस्य तादृशस्य
तव सम्बन्धि तादृशेन त्वया तत्र स्थाने स्वधयाऽन्नेन वयं मदेम ।
'लिङ्याशिष्यङ्' ॥

इति पञ्चमे सप्तमे चतुर्विंशोनुवाकः.

---

[1]द्यौस्ते पृष्ठमिति ॥ सर्वात्मतया अश्वस्स्तूयते । पृष्ठमुपरिभागः ।

अग्निः पशुरासीत्तेनायजन्त स एतं
लोकमजयद्यस्मिन्नग्निस्स ते लोक-
स्तं जेष्यस्यथावे जिघ्र वायुः पशु-
रासीत्तेनायजन्त स एतं लोकमज-
यद्यस्मिन्वायुस्स ते लोकस्तस्मा-
त्वाऽन्तरेष्यामि यदि नावजिघ्र-
स्यादित्यः पशुरासीत्तेनायजन्त स एतं

ज्ञानि । संवत्सर इति सं—वत्सरः । महिमा ॥५७

द्यौः पञ्चविꣳशतिः ॥ २५ ॥

[1]अग्निः । पशुः । आसीत् । तेन । अयजन्त । सः । एतम् । लोकम् । अजयत् । यस्मिन्न् । अग्निः । सः । ते । लोकः । तम् । जेष्यसि । अथ । अवेति । जिघ्र । वायुः । पशुः । आसीत् । तेन । अयजन्त । सः । एतम् । लोकम् । अजयत् । यस्मिन्न् । वायुः । सः । ते । लोकः । तस्मात् । त्वा । अन्तः । एष्यामि । यदि । न । अवजिघ्र-

---

सधस्थं सहस्थानम् । 'सुपि स्थः' इति कः । 'सधमाधस्थयोः' इति सधादेशः ॥

इति भट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये पञ्चमकाण्डे सप्तमप्रश्ने पञ्चविंशोऽनुवाकः.

स्यादित्यः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नादित्यस्स ते लोकस्तं जेष्यसि यद्यवजिघ्रसि॥५८

सीत्यव-जिघ्रसि । आदित्यः । पशुः । आसीत् । तेन । अयजन्त । सः । एतम् । लोकम् । अजयत् । यस्मिन्न् । आदित्यः । सः । ते । लोकः । तम् । जेष्यसि । यदि । अवजिघ्रसीत्यव-जिघ्रसि ॥ ५८ ॥

यस्मिन्नष्टौ च ॥ २६ ॥

[1]*अथ यदुक्तमश्वमेधब्राह्मणे 'अग्निः पशुरासीदित्यवघ्रापयेत्'† इति तमिमं मन्त्रमस्मिन् षड्विंशानुवाके पठति—अग्निः पशुरासीदिति ॥ हे अश्व अयं अग्निः देवः पुरा कस्मिंश्चित् जन्मनि त्वमिवाश्वमेधे यागहेतुश्चाश्वः पशुरासीत् । तेन अग्निरूपेण पशुना केचित् यजमाना अयजन्त । स च पशुरग्निर्देवो भूत्वा लोकं एतं अजयत् । यस्मिन् लोके सः अग्निः इदानीं तिष्ठति सः एव तवापि लोको भविष्यति, त्वं च तं लोकं जेप्यसि । अथैवं सति त्वमुत्सुकः सन् इदमुदकं जिघ्र । एवं वाय्वादित्यवाक्ययोरपि योज्यम् । वायुवाक्ये तु व्यतिरेकोपन्यासः—यदि उदकं नावजिघ्रसि तर्हि तस्मात् वायुलोकात् त्वां अन्तः एष्यामि त्वमन्तरितस्तस्माल्लोकाद्भ्रष्टो यथा

*एतस्यान्तिमानुवाकस्यापि भाष्यमत्रत्येषु भट्टभास्करभाष्यकोशेषु नोपलभ्यत इति माधवीयमेवात्र योजितम्.

†तै. ब्रा. ३-९-५.

यो वा अयथादेवतं त्वामग्न इन्द्रस्य चित्तिं यथा वै वयो वै यदाकूताद्यास्ते अग्ने मयि गृह्णामि प्रजापतिस्सोमस्याश्वस्तेगान् वाजं कूर्मान् योक्त्रं मित्रावरुणाविन्द्रस्य पूष्ण ओजं आनन्दमहरग्नेर्वायोः पन्थां क्रमैर्द्यौस्तेऽग्निः पशुरासीत्षड्विंशतिः ॥ २६ ॥

यो वा एवाहुतिमभवन्पथिभिरवरुन्ध्यानन्दमष्टापञ्चाशत् ॥ ५८ ॥

यो वा अयथादेवतं यद्यवजिघ्रसि.

हरिः ओम्—श्रीकृष्णार्पणमस्तु.

पञ्चमकाण्डे सप्तमप्रपाठकः

काण्डश्च समाप्तः. 

---

भवसि तथा करिष्यामि । आदित्यवाक्ये तु अग्निवाक्यवदन्वयः—यद्युदकं अवजिघ्रसि तर्हि तमादित्यलोकं जेष्यासि ॥

इति माधवीये पञ्चमे सप्तमे षड्विंशोनुवाकः.

प्रपाठकः काण्डश्च समाप्तः.





# शुद्धिपत्रिका.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १२ | १० | सः | सः । |
| २७ | ९ | द्वि॒तीयम्॑ | द्वि॒तीय॑म् |
| ३० | ३ | षाणं॑ | षाणं |
| ३९ | १ | जि॑गा | जिगा |
| ४० | १२ | ज॒ङ॒ | ज॒ङ्ग |
| ४२ | ६ | ऐ॒न्दा॒ग्नी | ऐ॒न्द्रा॒ग्नी |
| ६४ | ,, | वै॑ | वै |
| ७१ | १३ | त्यां॑ | त्या |
| ८१ | ३ | न्यङ्कु॑ः | न्यङ्कुः |
| १३३ | १० | षड् | षट् |
| १५० | २ | नै॒वै॑न॒ | नै॒वैन॒ |
| १५८ | १४ | चितीक॒। | चितीक॒ |
| १७१ | ३ | त॒ता | तै॒ता |
| १७६ | ४ | व॒शा | व॒शा |
| ,, | ५ | व॒श | व॒शे |
| १९८ | ८ | ऋ॒च्छि॒तु | ऋ॒च्छ॒तु |
| २०९ | ३ | भि॒ सं | भि सं |
| २४७ | ९ | अ॒ग्नयः | अ॒ग्नय॑ः |

# शुद्धिपत्रिका.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ५८ | ३ | देवैर्मिश्रि | देवैर्मिश्र |
| ५९ | ४ | ब्राह्मणम् | ब्राह्मणम् । |
| ९९ | १० | ५-६-२.[2] | ५-६-२.[3] |
| ११९ | १ | प्रथमोऽ | प्रथमो |
| १५२ | २ | षष्ट्प्रकारो | षट्प्रकारो |

